ओ३म् तत् सत्

श्री विघ्नहर्त्रे नमः

श्री गुरवे शिवाय नमः

# नित्य पाठ विधि

अगाधसंशयाम्भोधिसमुत्तरणतारिणीम् ।
वन्दे विचित्रार्थपदां चित्रां तां गुरु भारतीम् ।।

ॐ

प्रकाशक :
शैव आश्रम कल्याण केन्द्र
करण नगर, श्रीनगर (कश्मीर)

प्रथम बार ५००  मूल्य दो रूपये

# ॐ शिवाय गुरवे नमः

उों तत्त्वोत्तीर्णोऽतुल-निज-चमत्कारपूर्णो ह्यनन्या-
पेक्षी स्वैरी कचनपरमो भैरवो बोधभानुः
मालिन्यान्ध्यं त्रिविधमखिलं नाशयित्वाहृदब्ज-
संकोचं नः स्वकरनिकरेणोदितः सन्धुनोतु ॥१॥

या व्यक्तेः प्राक् किल परमहामंत्रभूमिः पराख्या
पश्यन्ती तामुपगतवती द्योतयन्त्यर्थजातम् ।
भेदामर्शारचन-कुशला मध्यमा वैखरी या
व्यक्ता संविल्लसतु हृदि नः क्षोभतूलाग्निहेतिः ॥२॥

श्री श्रीकंठादनुपम–फला याहि सन्तान-शाखा
याता तस्यां समधिगतवान् शैशवे शक्तिपातात् ।
श्रीरामाख्यं गुरुमथ च तत् सेवयावाप्तधीर्यः
तं श्री विद्याधर-गुरुवरं स्वात्मरामं नमामि ॥३॥

देहाद्यात्मे त्यखिल जगतामान्ध्यपूर्णो विवादः
तुच्छोच्छेद्यो यदपिच शिवः शास्ति चैतन्यमात्मा ।

आमृश्यैवं विपिनमगमद्रागजालस्य छित्यै
तं श्रीविद्याधरगुरुवरं स्वात्म-रामं नमामि ॥४॥

कार्कोटाहे गहन भवने हिंस्र-जीवैः परीते
शाक्तस्फारातिशय-विमलो जातसंविद्विकासः ।
क्रुद्धा हिंस्रा गुरु-वर-धिया मस्तकैं यं प्रणेमुः
तंश्रीविध्याधर-गुरु-वरं स्वात्म-रामं नमामि ॥५॥

यस्या-भूम्ना चकित-चकितोऽभूदयं मर्त्यवर्गः
पादौ स्पृष्टं द्रुतमुपययौ प्रावृणो-च् चाश्रमं तत् ।
नैतत् शर्मेत्यमर विवरं प्राप यः शैवधर्मा
तं श्री विध्याधर-गुरु-वरं स्वात्मरामं नमामि ॥६॥

आश्यानोयं चितिरस-मयः सर्वतो भाववर्गः
नानारूपं श्रयति द्रवतामागतोऽव्यक्ततां च ।
इत्यानीतः स्वगृहममरे-शेनयः शिक्षणार्थम्
तं श्री विध्याधर-गुरु-वरं स्वात्मरामं नमामि ॥७॥

स्वानारण्या वट-झर-महीध्रे शुचीर्णव्रतो यो
योगक्षेमी वितरणमतिशिचन्तयदात्मज्ञानम् ।

दानं भूत्यै भवति जगतां शिष्यिंश्चाविनीतान्
तं श्री विद्याधर-गुरु-वरं स्वात्मरामं नमामि ॥८॥

क्रीडाशीलो वलित-स्वतनुश्चेत्यसंकोचधर्मा
संसारी स्याच्छिव इत्युदितं शक्तिसूत्रेषु सम्यक् ।
तत्रोपायं स्वकरमविदद्युद्यमो भैरवो यः
तं श्रीविद्याधर-गुरुवरं स्वात्मरामं नमामि ॥९॥

शैवाम्नाय-प्रवचन-रति-शंकरो यो हि देवः
पीयूषांशुः इव मुख-रुचा ह्लादयन् शिष्यसंघान् ।
दीप्त्या भास्वान् इव हृदयपंकेरुहोद्बोधहेतुः
तं श्री विद्याधर-गुरुवरं स्वात्मरामं नमामि ॥१०॥

जज्ञे लग्ने धनुषि सविधौ यस्तुमीनेऽथ केतौ
भौमे सौरे रतिगृहगते कर्कटे चोष्मरश्मौ ।
शुक्रे ज्ञेज्ये नवमगृहगे कन्यकायां चराहौ
तं श्रीविध्याधर-गुरुवरं स्वात्मरामं नमामि ॥११॥

भूयः स्यात्प्रतिमेलनं प्रतिभुवः
सूत्रं शिवस्यान्तिमम् ।

सम्यक् योऽप्यवधार्य शाश्वतपदं
शैवं सहस्यामले ।
बाण-द्व्यच-अ-शरे समेऽपि च
तृतीयस्यां निशान्ते ययौ ।
श्री विध्याधर स्वामि-दैशकमणिर्भूयादघध्वंसकृत् ॥१२॥

यत्पाद-पद्म-संस्पर्शात्
सत्वरं श्यामचेतसाम् ।
सुन्दरो जायते बोधः
शरणं सोऽस्तु नः शिवः ॥१३॥

इति गुरुस्तुति समाप्ता ।

# प्रातः स्मरणम्

## ॐ

प्रातः स्मरामि भवभीतिहरं सुरेशम् ।
गंगाधरं वृषभ-वाहनमम्बिकेशम्
खट्वांग-शूल-वरदाभयहस्तमीशम्
संसार-रोग-हरमौषधमद्वितीयम् ॥१॥

प्रातर्नमामि गिरिशं गिरिजार्धदेहम्
सर्गस्थिति-प्रलयकारणमादिदेवम्
विश्वेश्वरं विजित विश्वमनोभिरामम्
संसाररोगहरमौषधमद्विवतीयम् ॥२॥

प्रातर्भजामि शिवमेकमनन्तमाध्यम्
वेदान्तवेधमखिलं पुरुषं महान्तम्
नामादि भेद-रहितं सुखदुःखशून्यम्
संसार–रोग-हरमौषधमद्विवतीयम् ॥३॥

चन्द्रार्धमौलीमतिसुन्दरमादिदेवम् ।
पूर्णेन्दुबिम्ब वदनं कमलासनस्थम्

पीयूष-पात्र-कलशाब्जवराभयाब्धिम् ।
देवं त्रिनेत्रममृतेश्वरमाश्रयामि ॥४॥

कर्पूर-गौरं करुणावतारं संसार-सारं भुजगेन्द्रहारम् ।
सदा रमन्तं हृदयारविन्दे भवं भवानी सहितं नमामि ॥५॥

स्वानन्दमानन्द-वने वसन्तम्
आनन्दकन्दं हृत-पाप-वृन्दम् ।
वाराणसीनाथमनाथनाथम्
श्रीविश्वनाथं शरणं प्रपद्ये ॥६॥

अनाथ बन्धो, करुणैक-सिन्धो,
दयानिधे मां शरणं प्रपन्नम् ।
दीनं अनाथं कुधनं कुधैर्य्यम्
दुर्दैवदग्धं परिपाहि शम्भो ॥७॥

ध्यायेत्नित्यं महेशं रजितगिरिनिभम्चारु चन्द्रावतंसम्
रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृतिं वसानम्
विश्वाद्यं विश्व-वन्द्यं निखिल-भयहरं पंचवक्त्रं
त्रिनेत्रम् ॥८॥

मध्ये प्राण-निविष्ट-हंस-परमा ये रोम-कूपाश्रयाः
प्राणात् सूक्ष्म-विमर्श--शालि-वपुषःसार्धत्रिकोटयात्मिकाः।
तान् मन्त्रात्मतयाविलोकयतियः स्वच्छन्दनाथः परो,
देवोऽसौ विधदातु भैरववपुस्तेजः परं शाश्वतम् ॥६॥

गात्रं मस्मसितं सितं च हसितं हस्ते कपालं सितम्
खट्वांगं च सितं सितं च वृषभं कर्णौ सिते कुंडले।
गंगा फेन सितो जटाजलसितो चन्द्रः सितो मूर्धनि
सोऽयं सर्वसितो दधातु विभवं पापक्षयं शंकरः ॥१०॥

विश्वं दर्पण-दृश्यमान-नगरी तुल्यं निजान्तर्गतम्
पश्यन्नात्मनि माययाबहिरिवोद्भूतं यथा निद्रया।
यः साक्षी कुरुते प्रबोध समये स्वात्मानमेवाद्वयम्
तस्मै श्रीगुरुमूर्तये नमइदं श्रीदक्षिणामूर्तये ॥११॥

रक्षणीयं वर्धनीयं बहुमान्यमिदं प्रभो,
संसार-दुर्गति-हरं भवद्भक्तिमहाधनम् ॥१२॥

सर्वाशंकाशनिं सर्वालक्ष्मीकालानलं तथा।
सर्वामंगल्य कल्पान्तं मार्गं माहेश्वरं नुमः ॥१३॥

यस्मिन् सर्वं यतः सर्वं यः सर्वं सर्वतश्चयः ।
यश्चसर्वमयौनित्यं तस्मै सर्वात्मने नमः ॥१४॥

शुभमतु सर्वजगतां परहित निरता भवन्तुभूतगणाः ।
दोषाः प्रयांतु शान्तिं सर्वत्र सुखी भवन्तु लोकाः ॥१५॥

सर्वे भवन्तु सुखिनः सर्वे संतु निरामयाः ।
सर्वे भद्राणि पश्यन्तु माकश्चित् दुःखमाक् भवेत् ॥१६॥

राजस्वस्ति प्रजास्वस्ति देशस्वस्ति तथैव च ।
यजमानगृहेस्वस्ति स्वस्ति गो-ब्राह्मणेषु च ॥१७॥

नन्दन्तु साधका सर्वे विनश्यन्तु विदूषकाः ।
अवस्था शांभवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥१८॥

दर्शनात् पाप शमनी जपात् मृत्युर्विनाशिनी ।
पूजिता दुःख दौर्भाग्यहरा त्रिपुरसुन्दरी ॥१९॥

नमामि यामिनीनाथलेखालंकृत कुन्तलाम्
भवानीं भवसंताप निर्वापण सुधानदीम् ।

यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत्
त्वया तत् क्षम्यतां देवि कृपया परमेश्वरि ॥२०॥

पृथिवी शान्तिः अन्तरिक्षं शान्तिः
द्यौः शान्तिः दिशः शान्तिः आपः शान्तिः
ओषधयः शान्तिः वनस्पतयः शान्ति
त्वयाऽहं शान्त्या सर्वशान्त्या मह्यं
द्विपदे चतुष्पदे शान्तिं करोतु शान्तिर्नो
अस्तु शान्तिरसि शान्तिः शान्तिः शान्तिः ॥२१॥

जयति जन्मारिष्टादुद्धरन्ती भवानी
जयति निजविभूतिव्याप्तविश्वः स्मरारिः ।
जयति च गजवक्त्रः सोऽत्र यस्य प्रसादात्
उपरमति समस्तो विघ्नवर्गोप सर्गः ॥२२॥

असतो मा सद्गमय तमसो माज्योतिर्गमय
मृत्योर्मामृतं गमय ॥ ॐ शान्तिः ३ ॥२३॥

अणोरणीयसे धाम्ने महतश्च महीसे
आदिमध्यान्त हीनाय मह्यमेव नमो नमः ॥२४॥

मत एवोदितं इदं मय्येव प्रतिबिम्बितम्
मत अभिन्नमिदं चेति मह्यं विश्वात्मने नमः ॥२५॥

सर्वभूतान्तरस्थाय नित्यमुक्तचिदात्मने
प्रत्यक्चैतन्यरूपाय मह्यं सर्वात्मने नमः ॥२६॥

दिव्यैश्वर्यविभूमन्त इह ये सर्वात्मना सर्वदा ।
कल्याणं कल्यन्ति सर्वं जगतां तेभ्यो महद्भ्यो नमः ॥२७॥

यन्मुहूर्तमतिक्रान्तं भगवच्छरणं विना ।
तदर्थं रोदनं कुर्यादनुताप-पुरस्सरम् ॥२८॥

अहोनिसर्गगंभीरो घोरः संसार-सागरः ।
अहो तत्तरणोपायः परः कोपि महेश्वरः ॥२९॥

रोगानशेषानपहंसि तुष्टा
पुष्णासि कामान्सकलानभीष्टान्
त्वामाश्रितानां न विपन्नराणाम्
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥३०॥

सौन्दर्यविभ्रमभुवो भुवनाधिपत्य
संपतिकल्पतरवस्त्रिपुरे जयन्ति
एते कवित्वकुमद प्रकरावबोध
पूर्णेन्दवस्त्वयि जगज्जननि, प्रणामाः ॥३१॥

ब्रह्मेन्द्र-रुद्र-हरि-चन्द्र-सहस्त्ररश्मि-
स्कन्द-द्विपानन-हुताशन वन्दितायै ।
वागीश्वरि ! त्रिभुवनेश्वरि ! विश्वमातः
अन्तर्बहिश्च कृतसंस्थितये नमस्ते ॥३२॥

अपराधसहस्राणि ज्ञात्वा ज्ञात्वापि यानि मे ।
क्षमस्व कृपया नाथ, महादेव, दयानिधे, ॥३३॥

जगदम्ब, विचित्रमत्र किं
परिपूर्णाकरुणास्ति चेन्मयि
अपराधपरंपरापरं
नहि मातासमुपेक्षते सुतम् ॥३४॥

सत्चिदानन्द रूपाय व्यापिने परमात्मने ।
नमः श्रीगुरुनाथाय प्रकाशानन्दरूपिणे ॥३५॥

स्मारं स्मारं जनिमृतिभयं जात-निर्वेद वृत्तिः
ध्यायं ध्यायं पशुपतिमुमकान्तमन्त र्निषण्णम् ।
पायं पायं सपदि परमानन्द पीयूषधारा
भूयो भूयो निजगुरुपदाम्भोजयुग्मं नमामि ॥३६॥

वन्दे गुरुं शिवफलार्थिषु कल्पवृक्षम्
भेदेन्दनैकदहनं शिवमार्ग दीपम् ।
शंभु जटाग्रकृत भूषणचन्द्र बिम्बम्
शैवोदधेर्वसुफलप्रदपोतमेतम् ॥३७॥

असारः खलु संसारो दुःखरूपो विमोहकः
सुतः कस्य धनं कस्य स्नेहाज्ज्वलतेऽनिशम ॥३८॥

न चेन्द्रस्य सुखं किंचित् न सुखं चक्रवर्तिनः
सुखमस्ति विरक्तस्य मुनेरेकान्त जीविनः ॥३९॥

ते पंकमंक गतमात्मनि धावयन्ति
दिक्मण्डलं च परितः परिपावयन्ति ।
क्लेशान् क्षणात् तृणगणानिव लावयन्ति
ये त्वां प्रकाशवपुषं हृदि भावयन्ति ॥४०॥

य

अधिवासतु सदा मुखमन्यकथालेपलब्धदुर्गन्ध्यम् ।
कर्पूर शकल इवमे शिव शिवइति शीतलः शब्दः ॥४१॥

स्वस्वरूप-परिज्ञानं मंत्रोऽयं पारमार्थिकः ।
दीक्षेयं ईश, योगश्च क्रियायामप्यनुत्तरः ॥४३॥

वचश्चेतश्च कार्यं च शरीरं यन्ममप्रभो,
त्वत्प्रसादेनभूयाद्द् मे भवभावैकभूषणम् ॥४४॥

उपायो नापरः कश्चित्
स्वसतावगमादृते ।
तामेवानुसरन्योगी स्वस्थो यः ससुखी भवेत् ॥४५॥

# ॐ नमोऽनुत्तरप्रकाशशंकराय ।

ओ३म् तत्सत् । श्रीविघ्नहर्त्रे नमः ।

श्रीगुरवे शिवायों नमः ।

आनन्दमानन्दकरं प्रसन्नं
ज्ञानस्वरूपं निजबोधयुक्तम् ।
योगीन्द्रमीड्यं भवरोगवैद्यं
श्रीसद्गुरुं नित्यमहं नमामि ॥१॥

श्रीमत्परंब्रह्मगुरुं नमामि
श्रीमत्परं ब्रह्मगुरुं भजामि ।
श्रीमत्परं ब्रह्मगुरुं वदामि
श्रीमत्परं ब्रह्मगुरुं श्रयामि ॥२॥

अगाधसंशयाम्भोधिसमुत्तरतारिणीम्
वन्दे विचित्रार्थपदां चित्रां तां गुरुभारतीम् ।
अनाद्यायाखिलाद्याय मायिनेगतमायिने
अरूपाय सरूपाय शिवाय गुरवे नमः ॥३॥

आब्रह्मस्तंभपर्यन्तं यस्य मे गुरुसन्ततिः ।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ॥४॥

अखंडमंडलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मैश्रीगुरवे नमः ॥५॥

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशिलाकया ।
चक्षुरुन्मीलितंयेन तस्मै श्रीगुरवे नमः ॥६॥

गुरुर्ब्रह्मा गुरुर्विष्णु गुरुः साक्षान्महेश्वरः ।
गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥७॥

नमामि सत्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम् ।
शिरसा योगपीठस्थं धर्मकामार्थसिद्धये ॥८॥

ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् ।
शास्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोःकृपा ॥९॥

चैतन्यं शाश्वतं शान्तं शान्तं व्योमातीत निरञ्जनम् ।
बिन्दुनादकलातीतं तस्मै श्रीगुरवे नमः ॥१०॥

अखंडानन्द-सिन्धोस्ते शिष्यसन्तापहारिणे ।
सच्चिदानन्दरूपाय शिवाय गुरवे नमः ॥११॥

श्री शंभुनाथ-भास्कर-चरणनिपातप्रभापगतसंकोचम् ।
अभिनव-गुप्त-हृदम्बुजमेतद्विचिन्वत
महेशपूजनहेतोः ॥१२॥

अभिनवरूपाशक्तिस्तद्गुप्तो यो महेश्वरो देवः ।
तदुभययामलस्थमभिनवगुप्तं शिवं वन्दे ॥१३॥

तत्पाद पद्मयुगलस्मृति भास्करमयूखवृन्दैः ।
विकसितकरणौघं लब्धक्षेमं क्षेमराजं वन्दे ॥१४॥

यः सर्वात्माखिलजनविभुर्देवदेवो महेशः
स्वातन्त्र्यस्थो ध्रुवपदगतो निश्चलात्मावरेण्यः ।
विश्वोत्तीर्णोभवभयहरः स्वेच्छया विश्वपूर्णः
तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥१५॥

यस्योन्मेष निमेषाभ्यां जगतःप्रलयोदयौ ।
तं शक्तिचक्र विभवप्रभवं शंकरं स्तुमः ॥१६॥

न ध्यायतो न जपतः स्याद्यस्याविधिपूर्वकं ।
एवमेव शिवाभासस्तं नुमो भक्तिशालिनम् ॥१७॥

उद्धरत्यन्धतमसाद्विश्वमानन्द वर्षिणी ।
परिपूर्णा जयत्येका देवी चिच्चन्द्रचंद्रिका ॥१८॥

नौमि चित्प्रतिभां देवीं परां भैरवयोगिनीम् ।
मातृमान प्रमेयांश शूलांबुजकृतास्पदाम् ॥१९॥

नौमि देवीं शरीस्थां नृत्यतो भैरवाकृतेः ।
प्रावृड्मेघगणव्योम विद्यु ल्लेखाविलासिनीम् ॥२०॥

प्रसरच्छक्ति कल्लोलजगल्लहरिकेलये ।
सर्वसंपन्निधानाय भैरवाम्भोधये नमः ॥२१॥

प्रसरबिन्दुनादाय शुद्धामृतमयात्मने ।
नमोऽनन्तप्रकाशाय शंकरक्षीरसिन्धवे ॥२२॥

सर्वसंविन्नदीभेदाऽभिन्न-विश्राम-भूमये ।
नमः प्रमातृवपुषे शिवचैतन्य सिन्धवे ॥२३॥

विश्वैक-रूप-विश्वात्म-विश्व-सर्गादि-कारणम् ।
परप्रकाशवपुषं स्तुमः स्वच्छन्दभैरवम् ॥२४॥

जयन्ति जगदानन्द-विपक्ष-क्षपणक्षमाः ।
परमेशमुखोद्भूतज्ञान चन्द्रमरीचयः ॥२५॥

विश्वात्मिकां तदुत्तीर्णां हृदयं परमेशितुः ।
परादिशक्तिरूपेण स्फुरन्तीं संविदंनुमः ॥२६॥

नमः शिवाय सततं पञ्चकृत्यविधायिने ।
चिदानन्द घनस्वात्म परमार्थावभासिने ॥२७॥

नमः शिवाय निःशेषक्लेश प्रशमशालिने ।
त्रिगुणग्रन्थिदुर्भेद भवबन्ध विभेदिने ॥२८॥

अकुलस्यास्य देवस्यकुलप्रथन शालिनी ।
कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः ॥२९॥

चतुर्दशयुतं भद्रे तिथीशांत समन्वितम् ।
तृतीयं ब्रह्म सुश्रोणि हृदयं भैरवात्मनः ॥३०॥

आद्यन्तरहितं बीजं विकसत्तिथिमध्यगम् ।
हृत्पद्मान्तर्गतं ध्यायेत् सोमांशं नित्यमभ्यसेत् ॥३१॥

रक्षणीयं वर्धनीयं बहुमान्यमिदं प्रभो ।
संसारदुर्गतिहरं भवद्भक्तिमहाधनम् ॥३२॥

सर्वशंकाशनिं सर्वाऽलक्ष्मीकालानलं तथा ।
सर्वमंगल्यकल्पान्तं मार्गं माहेश्वरंनुमः ॥३३॥

यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्चयः ।
यश्चसर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥३४॥

तद्देवता विभव भावि महामरीचिः
चक्रेश्वरायित निजस्थितिरेक एव ।
देवीसुतो गणपतिः स्फुरदिन्दुकान्तिः
सम्यक् समुच्छलयतान्मम संविदब्धिम् ॥३५॥

विश्वत्रभाव पटले प्रविजृम्भमाण
विच्छेदशून्य परमार्थचमत्कृतिर्या ।
तां पुर्णांवृत्यहमिति प्रथनस्वभावाम्
स्वात्मस्थितिं स्वरसतः प्रणमामिदेवीम् ॥३६॥

चैतन्यपूरितमिदं निखिलं हिविश्वम्
चित्तं चिदात्मनि यदास्तमुपैतिशश्वत् ।
एवं चितेरपृथगेवस्वसंस्थित्वाद
उक्तो निरस्तकरणः परमः समाधिः ॥३७॥

स्वातन्त्र्यशक्तिः क्रमसंसिसृक्षुः
क्रमात्मताचेति विभोर्विभूतिः ।
तदेव देवीत्रयमन्तरास्ताम्
अनुत्तरं मे प्रथयत्स्वरूपम् ॥३८॥

परं परस्थं गहणादनादिमेकं निविष्टं बहुधा गुहासु ।
सर्वालयं सर्वचराचरस्थं त्वामेव शंभुं शरणं प्रपद्ये ॥३९॥

क्लेशान्विनाशय विकासय हृत्सरोजम्
ओजो विजृम्भय निजं नरिनर्तयांगम् ।
चेतश्चकोर-चिति-चन्द्र-मरीचि-चक्रम्
आचम्य सम्यगऽमृतीकुरु विश्वमेतत् ॥४०॥

यावत्समाधौ न व्रजेल्लयं मनो
यावत्चिदानन्द-रसं न चर्वयेत् ।

यावन्न पश्येच्छिवतामयं जगत्
तावत्कथं बोधमयी दशापरा ॥४१॥

प्रकाशमाने परमार्थभानौ
नश्यत्यविद्या-तिमिरे समस्ते ।
तदा बुधा निर्मलदृष्टयोऽपि
किंचिन्न पश्यन्ति भवप्रपंचम् ॥४२॥

प्रकाशमानं न पृथक् प्रकाशात्
सच प्रकाशो न पृथक्विमर्शात् ।
नान्यो विमर्शोऽहमितिस्वरूपाद्
अहं स्वरूपोऽस्मिचिदेकरूपः ॥४४॥

प्रकाशमानां प्रथमे प्रयाणे
प्रतिप्रयाणेऽमृततोयरूपाम् ।
अन्तः पदव्यामनु संचरन्तीम्
आनन्दरूपामबलां प्रपद्ये ॥४५॥

भवन्मयस्वात्मनि वासलब्ध-
संपद्भिराभ्यर्चितयुष्मदंघ्रिः ।

न भोजनाच्छादनमप्यजस्रम्
अपेक्षते यस्तमहं नमामि ॥४६॥

निर्मानमोहा जितसंगदोषा
अध्यात्मनित्याविनिवृत्तकामा: ।
द्वन्द्वै र्विमुक्ताः सुखदुःखसंज्ञैः
गच्छंत्यमूढाः पदमव्ययंतत् ॥४७॥

सर्वस्य चाहं हृदिसन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनंच ।
वैदेश्च सर्वै रहमेव वेद्यो
वेदान्तकृत्वेदविदेव चाहम् ॥४८॥

नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः
अवस्था शांभवी मेऽस्तु प्रसन्नोऽस्तुगुरुः सदा ॥४९॥

शुभमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः
दोषाः प्रयांतु शान्तिं सर्वत्रसुखी भवन्तु लोकाः ।
सर्वे भवन्तु सुखिनः सर्वे संतु निरामयाः ।
सर्वे भद्राणि पश्यन्तु माकश्चित् दुःखभाजनम् ॥५०॥

राजस्वस्ति प्रजास्वस्ति देशस्वस्ति तथैव च ।
यजमानगृहे स्वस्ति स्वस्ति गोब्राह्मणेषु च ॥५१॥

नमामि यामिनीनाथ लेखालंकृतकुंतलाम् ।
भवानो भवसंताप-निर्वापण सुधानदीम् ॥५२॥

यदक्षरपदभ्रष्टं मात्राहीनं च यद्गतम् ।
त्वया तत्क्षम्यतां देवि, कृपया परमेश्वरि ॥५३॥

चिदानंदाम्भोधेरुदयति परा कामलहरी
प्रसूते भावौघं धरति हरते मातृवपुषा ।
प्रयातादेवक्ष्यां निजरतजनं पातुं अनिशम्
महाशक्तिः सैषा जगति जयतात् कृष्णवपुषा ॥५४॥

यतो वा इमानि भूतानि जायंते
येन जातानि जीवंति
यत्प्रयंत्यभिसंविशंति
तदेव ब्रह्म ॥५५॥

सतो वा इमानि भूतानि जायन्ते
सता जातानि जीवंति

सं तं प्रयंत्यभिसं विशंति
सदेव ब्रह्म ॥५६॥

चितो वा इमानि भूतानि जायंते
चिता जातानि जीवंति
चितं प्रयंत्यभिसं विशंति
चिदेव ब्रह्म ॥५७॥

आनंदात्खलु इमानि भूतानि जायंते
आनन्धेन जातानि जीवंति ।
आनंद प्रयंत्यभिसंविशंति
आनन्दं ब्रह्म ॥५८॥

मत्तोवा इमानि भूतानि जायन्ते
मया जातानि जीवन्ति
मां प्रयंत्यभिसंविशन्ति
अहमेव ब्रह्म ॥५८॥

ॐ शान्ति शान्ति शान्ति ।

ओ३म्

# नमो गुरवे शिवाय

ओ यः सर्वात्माखिलजन विभुर्देवदेवो महेशः
स्वातन्त्र्यस्थो ध्रुवपदगतो निश्चलात्मा वरेण्यः
विश्वोत्तीर्णो भवभयहरः स्वेच्छया विश्वपूर्णः
तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥१॥

यस्मादीशात्प्रसरति शिव-तत्वप्रभृतिज्यान्तम्
विश्वमेतत्परमवपुषा स्थीयते येन सम्यक्
यस्मिंस्तोयमिव क्रमतया लीयते वारिराशौ
तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥२॥

ब्राह्मीं मूर्तिं भुवनजनने राजसीं योबिभर्ति
तद्रक्षायां परमदयया वैष्णवीं सात्विकींच
तत्संहारेऽनलशततनुः तामसीं रौद्रमूर्तिम्
तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥३॥

संसाराब्धौ विषय-मकरे दुस्तरे संप्रमग्नाः
उद्धृत्यास्मिन् परमकृपया भेददृष्टिं विच्छिद्य

शैवं स्थातमचलममलं प्रापिता येन भक्ताः
तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥४॥

अस्मिल्लोके ह्युपमन्टवन्वये यश्च मर्त्यावतारं
आयातिस्म तिमिरहरणः सज्जनानां हिताय
प्राकाश्यार्थं स्वमतयशसः प्रेरितोरुद्रव्रातैः
तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥५॥

सूर्ये प्राप्ते धनुषि च गुरौ तारकेशे तुलायाम्
आद्ये भौमे सुखगतबुधे शत्रुगे भार्गवेऽपि ।
पंगुराह्वो दशम-सदने सिंहलगने तु जातः
तं श्रीरामं त्रिभुवनगुरुं स्वात्मरूपं नमामि ॥६॥

मूर्त्या शंभुः परमसुखदस्तेजसा द्वादशात्मा
प्रकृत्या तु शिशिर किरणः पावनश्चित्रभानुः ।
शैवी-दीक्षा-गलितवृजिनै र्लक्ष्यतेयश्च सद्भिः
तं श्रीरामं त्रिभुवन गुरुं स्वात्मरूपं नमामि ॥७॥

रूपं यस्य निखिलजगतां हृत्प्रमोदस्य हेतुः
यत्तदन्तानां किरणपटलैश्छात्रवृन्दाः विरेजुः

व्याख्यानेन प्रहसितमुखः कर्तनः संशयानाम्
तं श्रीरामं त्रिभुवन गुरुं स्वात्मरूपं नमामि ॥८॥

बाल्यादेव परमतपसि दुःसहे वर्ततेस्म
विश्वमेतत्परममहिमा यश्च स्वात्मन्यद्राक्षीत्
स्वात्मानं च जगति निखिले ज्ञानदृष्टया सदैव
तं श्रीरामं त्रिभुवन गुरुं स्वात्मरूपं नमामि ॥९॥

यः शैवाख्यं परमंभृतं निर्गतं स्वाननाब्जात्
तत्पादाब्जानुमतमनसो भक्तवृन्दानपीप्यत् ।
एतद्देहं परित्यज्य ह्यगाच्छाश्वतं शैव धाम
तं श्रीरामं त्रिभुवन गुरुं स्वात्मरूपं नमामि ॥१०॥

इति श्रीकाश्मीरिक-महामाहेश्वराचार्यवर्य
स्वामिवर-श्रीरामभट्टारक पादचरित्रं
राजानकविद्याधरेण विरचितं स्तुति-
पूर्वकं शुभाय बोभवीतु इतिशिवम् ॥११॥

# ओ३म्

# नमः पराशक्त्ये

आदिक्षान्त समस्तवर्णविभवा यामातृकारूपिणी
मंत्रवीर्य परामृतरसा स्वादात्सुख दायिनी ।
भावव्रात समुद्रगर्भलहरी शब्दार्थतत्वव्यापिनी
सा मां पातु सरस्वती भगवती श्रीराज राजेश्वरी ॥१॥

वाच्य वाचक सारपूर्ण विभवा देवी षडध्वाश्रया
श्रीचक्रान्तरवह्निकोण निलयाया बिन्दुमात्रात्मिका
सूक्ष्मात्सूक्ष्मतरा परामृतमयी नित्यं जगत्तर्पिनी
सा मां पातु सरस्वती भगवती श्रीराजराजेश्वरी ॥२॥

पूर्णाहन्त्वविमर्श पावनकरी नित्यं मलक्षालिनी
भक्तानां भवभीति भञ्जनकरी हृत्पंकजे संस्थिता ।
बाह्याभ्यन्तरचारिणी सुरसतो हंसेनया सेविता
सा मां पातु सरस्वती भगवती श्रीराजराजेश्वरी ॥३॥

उर्ध्वाधः स्थितनाडिवृन्दविभवे संजीविकामध्यमा
स्वात्मामशर्न तत्परैश्च सततं भक्तैः खलु प्राप्यते ।

मूलाद् ब्रह्मबिलावधितडिद्विया ब्रह्मनाडी स्मृता
सा मां पातु सरस्वती भगवती श्रीराजराजेश्वरी ॥४॥

वर्णावर्णनिवर्ण भेद निवहातत्राप्यभेदात्मिका
वेदान्तागमतन्त्र सार महिमाषड् दर्शनोल्लंधिनी।
सर्वाचार विचार पालन परायानिर्गता चारका
सा मां पातु सरस्वती भगवती श्रीराजराजेश्वरी ॥५॥

ओं तत्सदितिनामभिर्निगदिता सर्वागमे योगिभिः
तत्प्राणान्त विचार्यभक्त निबहैः ह्णीतमिव शष्पवत्।
ऐन्द्रं-धाम विहाय क्षीणकलुषैर्मोक्षाय या स्वीकृता
सा मां पातु सरस्वती भगवती श्रीराजराजेश्वरी ॥६॥

सौरं ज्योतिरिदमपि परिमितंह्णीतं तथा यत्पदात्
ओंमित्येतद्विमर्शनेन सततं सर्वमिदं स्वात्मनि
रक्तेस्तत्पद प्रेप्सुभिश्च मुनिभिःस्वस्थै सदास्वीकृतम्
सा मां पातु सरस्वती भगवती श्रीराजराजेश्वरी ॥७॥

तैस्तैर्योगिवरैः सदा कवियशोनक्तंदिनं यत्पद-
ध्यानावस्थित तद्गतेन मनसा प्राप्तं महत् निर्मलम

मोक्षं भोगं ददाति या प्रमुदिता विद्याधरैर्वंदिता
सा मां पातु सरस्वती भगवती श्रीराजराजेश्वरी ॥८॥

इति श्रीराज राजेश्वर्याः स्तुतिः राजानक
विद्याधर विरचिता शुभायास्तु ।

इति शिवम्



# ओ३म् नमः श्रीजगदम्बायै

ओ३म् विश्वेश्वरी निखिलदेव महर्षिपूज्या
सिंहासना त्रिनयना भुजगोपवीता ।
शंखाम्बुजास्यऽमृतकुंभक पञ्चशाखा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१॥

जन्माटवी प्रदहने दव-वह्नि-भूता
तत्पाद पंकजरजोगत चेतसां या ।
श्रेयोवतां सुकृतिनां भवपाशभेत्री
राज्ञी सदा भगवती भवतु प्रसन्ना ॥२॥

देव्या यया दनुजराक्षसदुष्ट-चेतो
न्यग्भावितं चरणनूपुरशिञ्जितेन ।
इन्द्रादिदेवहृदयं प्रविकासयन्ती
राज्ञी सदा भगवती भवतु प्रसन्ना ॥३॥

दुःखार्णवे हि पतितं शरणागतं या
चोद्धृत्य सा नयति धाम परं दयाब्धिः ।
विष्णुगजेन्द्रमिव भीतभयापहर्त्री
राज्ञी सदा भगवती भवतुप्रसन्ना ॥४॥

यस्या विचित्रमखिलं हि जगत्प्रपञ्चम्
कुक्षौ विलीनमपि सृष्टिविसृष्टिरूपात् ।
आविर्भवत्यविरतं चिदचित्स्वभावम्
राज्ञी सदा भगवती भवतु प्रसन्ना ॥५॥

यत्पाद पंङ्कजरजः कणज प्रसादात्
योगीश्वरैर्विगत कल्मषमानसैस्तत् ।
प्राप्त पदं जनिविनाशहरं परं सा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥६॥

यत्पादपंकज रजांसि मनोमलानि
संमार्जयन्ति शिवविष्णु विरिञ्चिदेवैः ।
मृग्यान्यऽपश्चिमतनोः प्रणुतानि माता
राज्ञी सदा भगवती भवतु प्रसन्ना ॥७॥

यत्पाद चिन्तन दिवाकर रश्मिमाला
चान्तर्बहिश्करणवर्ग सरोजषण्डम् ।
ज्ञानोदये सति विकास्य तमोपहर्त्री
राज्ञी सदा भगवती भवतु प्रसन्ना ॥८॥

यद् दर्शनामृतनदी महदोघयुक्ता
संप्लावयत्यखिल भेदगुहास्वऽनन्ता ।
तृष्णाहरा सुकृतिनां भवतापहर्त्री
राज्ञी सदा भगवती भवतु प्रसन्ना ॥९॥

हंसस्थिता सकलशब्दमयी भवानी
वाग्वादिनी हृदय पुष्कर चारिणीया ।
हंसीव हंसरजनीश्वर वह्निनेत्रा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१०॥

या सोमसूर्यवपुषा सततं सरन्ती
मूलाश्रयात्तडिदिवाऽऽविधरन्ध्रमीढया ।
मध्यस्थिता सकलनाडिसमूहपूर्णा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥११॥

चैतन्यपूरित समस्त जगद्विचित्रा
मातृप्रमेय परिणामतया चकास्ति ।
या पूर्णवृत्त्यहमिति स्वपदाधिरूढा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१२॥

या चित्क्रमाक्रमतया प्रविभातिनित्या
स्वातन्त्र्यशक्तिरमला गतभेदभावा ।
स्वात्मस्वरूप सुविमर्शपरैः सुगम्या
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१३॥

या कृत्यपंचक निभालन लालसैस्तैः
सन्दृश्यते निखिलवेद्यगतापि शश्वत्
सान्तर्धृता परप्रमातृपदं विशन्ती
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१४॥

यानुत्तरात्मनि पदे परमाऽमृताब्धौ
स्वातन्त्र्यशक्तिलहरीव बहिः सरन्ती ।
संलीयते ्वरसतः स्वपदे सभावा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१५॥

मेरोः सदैव हि दरीषुविचित्रवाग्भिः
गायन्ति यां भगवतीं परिवादिनीभिः ।
विद्याधरा हि पुलकाङ्कित विग्रहाः सा
राज्ञी सदा भगवती भवतु प्रसन्ना ॥१६॥

राज्ञीं सदा भगवतीं मनसा स्मरामि
राज्ञीं सदा भगवतीं वचसा गृणामि ।
राज्ञीं सदा भगवतीं शिरसा नमामि
राज्ञीं सदा भगवतीं शरणं प्रपद्ये १७॥

राज्ञ्याः स्तोत्रमिदं पुण्यं
यः पठेद्भक्तिमान्नरः
नित्यं देव्याः प्रसादेन
शिवसायुज्यमाप्नुयात् ॥१८॥

श्रीजगदम्बास्तुती-राजानक-विद्याधर-
विरचिता शुभदा बोभूयात् इति शिवम् ॥

जय देहाद्रिकुञ्जान्तर्निकूजञ्जीव जीवक ।
जय सन्मानसव्योमविलासिवर सारस ॥

# श्री श्यामसुन्दर्यै ॥

ओं नमामि कालिकादेवीम ज्ञानकालिकापहाम् ।
सर्वावभासिनीं ज्वालां ज्ञानदीप प्रज्वालिनीम् ॥१॥

कालिके त्वं जगत्माता कालिके त्वं जगत्पिता ।
कालिके त्वं जगद्‌बन्धुःकालिकायै नमोस्तु ते ॥२॥

कालमेघसमानाभा काली श्री श्याम सुन्दरी ।
त्रिकाल ज्ञानजननी कालिका प्रीयतां मम ॥३॥

सूर्यकोटि प्रतीकाशा चन्द्रकोटि समानना ।
अग्निकोटिसमा घोरा कालिका प्रीयतां मम ॥४॥

चन्द्रार्कवह्निनयना तापत्रय विनाशिनी ।
मलत्रयापहर्त्री च कालिका प्रीयतां मम ॥५॥

चितिशक्तिः स्वतन्त्रा पञ्चकृत्य विधायिनी ।
विश्वाकारा विश्वोत्तीर्णा कालिका प्रीयतां मम ॥६॥

देवपितृपथोर्मध्ये हंसावाहनचारिणी
विद्युद्रूपा सुसूक्ष्मा च कालिका प्रीयतां मम ॥७॥

चिद्रसाऽऽश्यानभिन्ना च घटपटादिरूपिणी
मृत्स्वर्णजलवदेका कालिका प्रीयतां मम ॥८॥

पुरत्रयाश्रया देवी त्रिपुरा त्रिपुरान्तका
त्रिवेदजजननी विद्या कालिका प्रीयतां मम ॥९॥

दाक्षायणी यज्ञहर्त्री सर्वदेव भयङ्करी
गोपिताऽऽकृतिरीशानी कालिका प्रीयतां मम ॥१०॥

हिमाद्रितनया गौरी तपसा तोषितेश्वरी
त्रिजगज्जननी दुर्गा कालिका प्रीयतां मम ॥११॥

नारायणी महालक्ष्मीः सर्वकाम प्रदायिनी
त्रिसन्ध्या वैखरी धात्री कालिका प्रीयतां मम ॥१२॥

अरिशङ्खकृपाणासि-शूलपाशाब्जपाणिका
रक्तपात्रकरा चैव कालिका प्रीयतां मम ॥१३॥

चन्द्रार्धकृतचूडा च कपाल माल धारिणी
अट्टाट्टहासिनी भीमा कालिका प्रीयतां मम ॥१४॥

प्रेतासनसमारूढा प्रेतभूमिविहारिणी
त्रिजगद्ग्रासिनी घोरा कालिका प्रीयतां मम ॥१५॥

महाकालस्वरूपा च महाकाल क्षयंकरी
महारौद्री च चंडी च कालिका प्रीयतां मम ॥१६॥

त्रिकोटिदेवजननी त्रिकोटि देव नाशिनी
त्रिकोटिदेवतारूपा कालिका प्रीयतां मम ॥१७॥

ज्वालामुखीस्वरूपाच महापातकनाशिनी
मोहान्धकारशमनी कालिका प्रीयतां मम ॥१८॥

जयतु जयतु श्यामा कालमेघावभासा
जयतु जयतु देवैः स्तूयमानपदाब्जा
जयतु जयतु योगिहृत्कजान्तर्निविष्टा
जयतु जयतु माता कालिका कालहर्त्री ॥१९॥

इति श्री श्यामायाः स्तुती राजानक-
विद्याधर विरचिता शिवदाऽस्तुतरां ।
ओं तत्सद् ओम् ॥

# नागार्जुनकृता चित्तसन्तोषत्रिंशिका ।

लोकोत्तरानुभवसस्मितघूर्णमान-
स्वानन्दसुन्दरविनिर्मलनिर्निमेषा ।
यत्स्फारतः पशुरपीश्वरतां प्रयाति
सा कापि दृक्विजयते गुरुपुङ्गवानाम् ॥१॥

दिष्ट्या भवानलशिखाशततापतप्तं
जन्माटवीषु विषमासु कदर्थितं यत् ।
चेतस्तदेतदधुनामलचित्सुधाब्धि-
मध्ये निमग्नमसमां भजते प्रशान्तिम् ॥२॥

व्यामूढमन्धमिव संशयदोषदुष्टं
चेतो यदेतदभवद्भवदुःखपात्रम् ।
ज्ञातं तदद्य गुरुपादसरोजसेवा-
सञ्जातनिर्मलविबोधमहाप्रकाशम् ॥३॥

संकोचमाश्रितवतो निबिडं विमोहात्
यस्याभवद्भयमिहेन्द्रियपन्नगेभ्यः ।
चेतस्तदाप्य विमलोर्जितसंविदाज्ञां
निशंकमद्य रमते विषयाटवीषु ॥४॥

कन्दर्पबाणविषमं हरिणेक्षणाभिः
पीत हतं कवलितं मुषितं मदासीत् ।
तत्पात्रतामुपगतं परमोज्ज्वलक्ष्मी-
प्रेमामृतप्लुतकटाक्षपरंपराणाम् ॥५॥

क्लिष्टं यदेतदभजज्जपकष्टहोम-
प्राणप्रवाहविनिरोधकदर्थनाभिः ।
चेतस्तदद्य परमाद्वयसामरस्य-
सञ्जातसंमदरसासवमत्तमद्य ॥६॥

यो भेदतीव्रशिशिरप्रसरोपघात-
भीतो मनोमधुकरो हतशक्तिरासीत् ।
आसाद्य सोऽद्य शिवधाममधुं सदास्ते
संविल्लताकुसुमसौरभमानमत्तः ॥७॥

व्यक्तस्वतन्त्रनिजरूपमहाप्रभावं
यत्कर्म बिन्धुधरणीषु विलीनमासीत् ।
स्वच्छप्रभाप्रसरपूरितसर्वलोकं
चेतश्चिदम्बरपदेन तदद्य माति ॥८॥

विकल्प

यत्नेन वाञ्छितमनल्पजाल-
विघ्नैस्तिरस्कृतमवाप न यत्प्रवेशम् ।
दुर्भेदभिन्नविषमार्गलभिन्नमार्गं
चेतस्तदद्य रमते शिवमन्दिरान्तः ॥९॥

योगव्रतादिनियमैरुपसेवितापि
नावाप दर्शनपथं किल यस्य जातु ।
संवित्प्रियासुभगमूर्जितभाग्यसंपत्
चेतस्तदद्य न जहाति मुहूर्तमेकम् ॥१०॥

दुःखैकसारमिति भीम इति प्रयत्नात्
संसार एष किल यस्य बभूव हेयः ।
दिष्ट्या स एव परचिद्रससामरस्य-
संजीवितः श्रयति तस्य विमुक्तिसाम्यम् ॥११॥

तृष्णाकरालकरवालविलुप्यमानं
यद्विस्मृतात्मविभवं कृपणं बभूव ।
उच्चैरकिञ्चनतयापि तदद्य चेतः
स्वात्मावमर्शपरहर्षमुदारमास्ते ॥१२॥

कस्योर्जितस्य सुकृतस्य फलं तदेतत्
पुण्योदयस्तव कुतोऽयमनन्यलभ्यः ।
संविच्छ्रिया गलितभेदविकल्पया यत्
एकं मुहूर्तमपि नैव विमुच्यसे त्वम् ॥१३॥

वर्तामहे क्वचन नाम न चित्त ! दिष्ट्या
वर्धामहे वयमहो मुदिता भवामः ।
यत्त्वां सखे परनिरुत्तरशैवसंपत्
संभोगमन्थरतरं परिलोकयामः ॥१४॥

ध्यानेऽर्चनेऽपि न कदाचन काञ्चनापि
कुत्रापि निर्वृतिदशा बत यन्न लेभे ।
दिष्ट्या निमग्नमपि संव्यवहारमध्ये
चेतस्तदद्य न विमुञ्चति पारिपूर्ण्यम् ॥१५॥

सर्वेषु चित्तमधुपो विषयद्रुमेषु
बभ्राम यः सततमस्तमिताभिलाषः ।
दैवादवाप्य परमेश्वरपारिजातं
तृप्तो विलीन इव मुञ्चति चञ्चलत्वम् ॥१६॥

यैरिन्द्रियैरसि वशीकृतशक्ति चेतः !
पूर्वं कदर्थितमभूरहितैरिवोच्चैः ।
स्वच्छानिकेतपरचिद्रससंविभक्तैः
दिष्ट्याद्य तैरनुचरैरिव राजसे त्वम् ॥१७॥

चिन्तां ततान करुणं प्रललाप पूर्वं ।
यत्संकुचत्स्थितिभयं रविजाद्विचार्य ।
चेतस्तदद्वयमिदं निजरूपमीक्ष्य
दिष्ट्याद्य निर्भयममन्दमुदात्तमास्ते ॥१८॥

नित्यं यदेतदभवद्विफलप्रयासं
हेवाकदुर्ललितमप्रथितात्मभावम् ।
संवित्सुधारसचमत्कृतिघूर्णमानं
दिष्ट्या तदद्य नितरां स्पृहणीयमास्ते ॥१९॥

चिन्ताशताकुलतरं न रतिं कदाचित्
भीतं भवादभजतैकमपि क्षणं यत् ।
चेतश्चिदात्मकमिदं सकलं विलोक्य
सुप्तप्रबुद्धमिव निर्वृतरूपमास्ते ॥२०।

वन्दामहे किमु नुमः किमु गौरवेण
हर्षेण चित्त ! किमु नाम निपीडयामः ।
संप्राप्तदुर्लभमहोदयशैवसंपत्
त्वां कौतुकेन किमु मित्र ! विलोकयामः ॥२१॥

अपृच्छतामियमनादिधनप्रबोध-
स्नेहानुविद्धहृदयात् हृदयाध्य माया ।
संसेव्यतां सुभगशैवपदप्रवेश-
संप्राप्तदुर्लभमहोदयमुक्तिलक्ष्मीः ॥२२॥

किं ब्रूमहेऽत्र भवते सुकृतेन सत्ये
सर्वाशिषामविषये ननु वर्तसे त्वम् ।
यत्कारणातिगतनिर्मलनिर्विकल्पा
स्वच्छन्दशंकरपदे भजसेऽनुरागम् ॥२३॥

चित्रं यदेतदसमं यदभूत् सुखेषु
प्राप्तेषु निर्वृतिदशामनुवर्तमानम् ।
दुःखेषु दुस्सहतरेष्वपि चित्तमध्य
पूर्णप्रमोदरसनिर्भरमेतदास्ते ॥२४॥

वन्दामहे किमु नुमः गौरवेण
हर्षेण चित्त ! किमु नाम निपीडयामः ।
संप्राप्तदुर्लभमहोदयशैवसंपत्
त्वां कौतुकेन किमु मित्र ! विलोकयामः ॥२१॥

अपृच्छताभियमनादिघनप्रबोध-
स्नेहानुविद्धहृदयात् हृदयाच्च माया ।
संसेव्यतां सुभगशैवपदप्रवेश-
संप्राप्तदुर्लभमहोदयमुक्तिलक्ष्मीः ॥२२॥

किं ब्रूमहेऽत्र भवते सुकृतेन सत्ये
सर्वाशिषामविषये ननु वर्तसे त्वम् ।
यत्कारणातिगतनिर्मलनिर्विकल्पा
स्वच्छन्दशंकरपदे भजसेऽनुरागम् ॥२३॥

चित्रं यदेतदसमं यदभूत् सुखेषु
प्राप्तेषु निर्वृतिदशामनुवर्तमानम् ।
दुखेषु दुस्सहतरेष्वपि चितमद्य
पूर्णप्रमोदरसनिर्भरमेतदास्ते ॥२४॥

विश्वं निगीर्य सहसा कवलं विधाय
कालं प्रशान्तगगनोपमदिव्यमूर्तिः ।
या राजते निरुपमामृतपूरपूर्णा
सा कापि खेचरगतिर्जयति त्वदीया ॥२५॥

ते कारणादिपतयः प्रलयं प्रयान्ति
यस्मिन् महावटतटे विषमे गभीरे ।
शक्तिर्निजं वपुरपि प्रसभं जहाति
तद्धाम संश्रयसि वीरवर! त्वमेकम् ॥२६॥

विद्युद्विलासचपले विभवे नताङ्गी
भ्रूभङ्गभङ्गुरतरेऽपि च जीवितेऽस्मिन् ।
चित्त! त्वयैव विजितं श्रयता विनाशि
दिग्देशकालकलनारहितं पदं तत् ॥२७॥

स्वस्त्यस्तु तेऽम्बरविकस्वरसंप्रदाय-
संप्राप्तशंकरपदोदितसंमदाय ।
दुर्वारसंसृतिदशास्वपि निर्विकार-
नित्योदितात्मविभवाय भवाभवाय ॥२८॥

स्वच्छन्दनिर्मलसदोदितनिर्निकेत-
संवित्सुधारसचमत्कृतिनिर्भरोऽसि ।
दिष्ट्याद्य सद्गुरुमुखाम्बुजमद्य लब्ध्वा-
नुच्चार्यचारुकथनोदयविस्मितोऽसि ॥२९॥

भवमरुभुवि श्रान्तो मोहात् य एष मनोऽध्वगो
विषमविषयप्रोध्यत् तृष्णानिवेशवशीकृतः ।
शिवपदसुधासिन्धुं दैवादवाप्य ससादरं
किमपि सुखिनो मज्जं मज्जं निमज्जति सांप्रतम् ॥३०॥

निरावरणचिद्व्योम परमामृतनिर्भरः ।
नागार्जुनो व्यधादेनां चित्तसन्तोषत्रिंशिकाम् ॥

इति विपश्चिद्वर-नागार्जुनविरचिता चित्तसन्तोषत्रिंशिका ।

अथ

# परमार्चनत्रिंशिका नागार्जुनकृता ।

स्नानपूजनसमाधिभिः क्रमात्
यन्महात्मभिरवाप्यते पदम् ।
कैश्चिदक्रमत एव यन्मया
तत्समर्चनमिषेण कथ्यते ॥१॥

बालिकारचितवस्त्रपुत्रिका-
क्रीडनेन सदृशं तदर्चनम् ।
यत्र शाम्यति मनो न निर्मलं
स्फीतचिज्जलधिमध्यमाश्रितम् ॥२॥

किं तदर्चनमनल्पकल्पना-
जालशम्बरनिपातितात्मकम्
यत्र नास्ति स्वविकल्पनोज्झितः
स्फीतसौख्यशिवसङ्गमोत्सवः ॥३॥

अप्रयत्नमनिकेतनं पदं
दिव्यमाप्य मनसैव वृत्तयः ।
यत्र यान्ति विलयं न सर्वतः
किं तदर्चनमसौ पराभवः ॥४॥

यत्र वर्षति न खेचरी स्थिति-
श्चित्सुधारसभरौघनिर्भरम्
देहचित्तपरिपीडनादहं
किं तदर्चनमसौ पराभवः ॥५॥

खेचरीप्रभृतिपञ्चकात्मना
व्याप्तिमम्बरगतां निभालयन् ।
हृद्विकाससुलभां भवापदो
यत्र मुञ्चति न किं तदर्चनम् ॥६॥

यत्र साहससमाधि संचयः
प्रस्फुलद्विमलबोधनिर्भरः ।
स्फीतसंविदुदयं न विन्दते
सर्ववृत्तिषु किमेतदर्चनम् ॥७॥

विश्वसंस्मृतिरसैकतत्परो
लेलिहानरसना कुतो यमः ।
यत्र चित् शिखिशिखासु हूयते
लीलयैव न किमेतदर्चनम् ॥८॥

स्तब्धमन्थरमनोहरेक्षणः
प्रोल्लसत्पुलकम्बितानन: ।
मध्यमां भुवमनल्पसंपदं
यत्र नाश्रयति किं तदर्चनम् ॥९॥

मानमेयमिति कल्पनोज्झितो
निर्विकारमनिकेतनः शिवः ।
गाडगाडमवगाह्यते क्षणात्
नैव यत्र ननु किं तदर्चनम् ॥१०॥

व्योमकल्पममितं निजं वपुः
वीक्ष्य चित्परसुधारसाश्चितम् ।
स्वात्मनात्मनिरस्तकल्पना
यत्र हृष्यति न किं तदर्चनम् ॥११॥

निर्निकेतनिरुपाधि विप्लवः
स्फारचिद्रविमरीचिसंचयैः ।
विश्वमारचितमीक्ष्य विस्मयं
यत्र नाविशति किं तदर्चनम् ॥१२॥

यत्र नित्यपरहर्षनिर्भरः
चित्सुधारसविपानघूर्णितः ।
ध्यानयोगकलनासु लज्जते
नीरसासु न किमेतदर्चनम् ॥१३॥

शक्तिविस्तरविमर्शविस्फुरत्
कन्दयुग्मयुगपद्विगाहनात् ।
भैरवं वपुरुदारचेष्टितं
यत्र न स्फुरति किं तदर्चनम् ॥१४॥

इन्द्रियेषु विषयानुवर्तिषु
प्राणवर्त्मनि निजप्रवाहके ।
कापि निर्वृतिमये चिदूर्जिता
यत्र नोल्लसति किं तदर्चनम् ॥१५॥

दिव्यखेचरदृशा निरीहया
नादबिन्दुमयभावसंचयम् ।
यत्र शुष्कमिव पावकस्तृणं
न क्षयं नयति किं तदर्चनम् ॥१६॥

शान्तिमेत्य न विकल्पविप्लवः
चिच्चमत्कृतिरसो न वर्धते ।
लुप्यते न घनवासनावनं
क्वापि तृप्तिरसमा न जायते ॥१७॥

मन्यते न कृतकृत्यतां जनो
द्वैतमेघतिमिरं न भिद्यते ।
यत्र दोषशतसंकुलं मनो
न प्रसीदति किमेतदर्चनम् ॥१८॥

चिन्नभः सरसि सारसीं परां
शक्तिमच्छप्रभवां प्रबोधयन् ।
मन्त्रवीर्यममित निसर्गतो
यत्र नाश्रयति किं तदर्चनम् ॥१९॥

निर्विकारमजरं निरामयं
निर्विकल्पममलं निजं वपुः ।
वीक्ष्य जन्ममरणोद्यतं भयं
यत्र मुञ्चति न किं तदर्चनम् ॥२०॥

शान्तवीचिचयसिन्धुसन्निभां
सर्वसंविदुदयावनिं पराम् ।
सृष्टिसंस्थितिलयं प्रसक्तिभिः
विश्वसुन्दरविवर्तवर्तिनीम् ॥२१॥

शक्तिचक्रपरमादिदेवतां
अम्बरप्रथमभूमिकामजाम् ।
मङ्गलामसममन्त्रमातरं
यत्र पश्यति न किं तदर्चनम् ॥२२॥

सोमसूर्यदहनेन्धनोद्धतः
स्फीतचित्ज्वलनदीप्तिभास्वरः ।
दुर्निरीक्ष्यगति ऋद्धितेजसा
भाति यत्र न किमेतदर्चनम् ॥२३॥

आत्मनात्मनि न जानति विधिं
निस्तरङ्गपरबोधभास्वरः ।
यत्पदस्थितिजुषो महाजनः
मुक्तिसंसृतिसमानबुद्धयः ॥२४॥

यद्यदा पततित वेद्यता भुवं
तेन तेन ननु यद्विवर्जितम् ।
नित्यनिर्मलसमानभूमयो
यत्पदे विमतिबालकल्पनाः ॥२५॥

यद्विशृंखलमदोदयोल्लसत्
शक्तिपातवशतो विजृम्भते ।
तत्पदं यदि गुरुप्रसादतो
लब्धमुत्तममथार्चितः शिवः ॥२६॥

भावसञ्चयविमुक्तविग्रहा
विश्वमय्यपि परप्रथात्मिका ।
कापि संविदमलाम्बरप्रभा
जृम्भते यदि तदार्चितः शिवः ॥२७॥

किञ्चनापि न विमुच्यते क्वचित्
किञ्चनापि नच गृह्यते क्वचित् ।
स्वं वपुर्विमलबोधनिर्भरं
दृश्यते यदि तदार्चितः शिवः ॥२८॥

भैरवा विर्विधकल्पनात्मकाः
प्रोल्लसन्ति बहवो यतोऽम्बिका
सा यतः स्फुरति तत्परं पदं
भाति चेद्गुरुदृशा शिवोऽर्चितः ॥२६॥

आसादितं गुरुमुखादिदमप्रयत्न-
सिद्धं शिवार्चनमपापधियामवाप्यम् ।
यत्तन्मया निगदितं तदनल्पवांछा-
संबोधनाय सुधियां शिवभक्तिभाजाम् ॥३

अनवच्छिन्नचिद्व्योमपरमामृतबृंहितः ।
नागार्जुनो व्यधादेनां परमार्चनत्रिंशिकाम्
इति नागार्जुनकृता परमार्चनत्रिंशिका ॥

❀ इति समाप्तः ❀

